श्रीसरस्वती शरणम् ।

अष्टमे वर्षे ] कार्तिकस्य पूर्णिमा सं० १९८४ [ पञ्चम-संख्या




रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन् ।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्
संजातः सुमनोमनो मधुरयन् सर्वत्र "सूर्योदयः" ॥

सम्पादकः—

श्रीमान् अन्नदाचरणशर्मा तर्कचूडामणिः

[ महामहाध्यापकः, महामहोपाध्यायः ]

—०:※:०—

उद्गम-स्थानम्—

श्रीभारतधर्ममहामण्डलम्, ( जगत्गंज ) काशी ।

---

वार्षिकं मूल्यं मुद्रात्रयम् ।

संरक्षकेभ्यः ५) असमर्थेभ्यःछात्रेभ्यः १)

विश्वविद्यालयसदस्येभ्यः ३) पुस्तकालयेभ्यश्च १)

---

## शुभसंवादः ।

भारतवर्षस्य विविधप्रदेशेषु अखिल-भारतवर्षीय-संस्कृतविश्वविद्यालयस्य षडशीतिकेन्द्राणामद्यावधि स्थापनमभूत् । तत्र षट्त्रिंशत्केन्द्राणां सचिवेभ्यः केन्द्रमानपत्राणि प्रहितानि । यैः केन्द्राध्यक्षैः केन्द्रावेदनपत्राणि प्रपूर्य प्रेष्यन्ते तेभ्यो विश्वविद्यालयेन मानपत्राणि दीयन्ते । तदर्थं निम्नलिखितसङ्केते पत्रव्यवहारो विधेयः ।

गङ्गाविष्णुशास्त्री,
कार्यसम्पादकः,
अखिलभारतीय-संस्कृतविश्वविद्यालय,
श्रीमहामण्डल भवन, जगत्गंज, काशीधाम ।

---

## नियमाः सूचना च

(१) सूर्योदयः प्रतिपौर्णिमं प्रकाशितो भवति । ये पञ्चरूप्यकात्मकं ५) साहाय्यं करिष्यन्ति ते संरक्षका भवितुमर्हन्ति । संस्कृत-विश्वविद्यालय-सदस्येभ्यो मूल्यमस्य रूप्यकत्रयं ३) वार्षिकम् । असमर्थेभ्यो विद्यार्थिभ्यः पुस्तकालयेभ्यश्च १) रूप्यकेणैकेनेदं पत्रं प्रदीयते ।

(२) ग्राहकेभ्यो विश्वविद्यालयसदस्येभ्यः तथा विज्ञापनसंग्रहाद्य यो हि धनागमो भविष्यति स च संस्कृतविश्वविद्यालयस्य "छात्रवृत्तिकोषे" स्थास्यति ।

(३) ग्राहकैः प्राचीनैः स्वीया ग्राहकसंख्या, नवीनैश्च 'नवीनोऽहम्' इति नून लेख्यम् । अन्यथा पत्रप्रेषणे तथाऽन्यव्यवस्थाविधाने च महान् विलम्बो भवेत् । येषां समीपे समुचितसमये सूर्योदयो न गच्छेत्, तैः पत्रालये [ पोस्ट आफिस ] अन्वेषणानन्तरं शीघ्रं सूचना देया । धनादेश-( मनीआर्डर ) द्वारा स्वपूर्णसंकेतं सुस्पष्टं विलिख्य सूर्योदय-मल्यं प्रेषणीयम् । अत्र विज्ञापनदानेन महीयसो लाभस्य सम्भावना । विज्ञापननियमाः पत्रं प्रेष्य ज्ञेयाः । सूर्योदये मुद्रापणीयानि निबन्धादीनि तत्सम्बन्धीयपत्राणि, कार्यालयव्यवस्थाविषयकदलानि च "श्रीमदवधेशप्रसादद्विवेदी व्यवस्थापक-सूर्योदय कार्यालय जगत्गंज, बनारसकैण्ट," इति संकेतेन प्रेषणीयानि ।

---

# सूर्योदयः ।

अष्टमे वर्षे } कार्तिकस्य पूर्णिमा सं० १९८६ । { पंचम-संख्या

## सम्पादकीया अभिप्रायाः ।

—:○०○:—

### धर्मो देशसेवा च ।

—:०:०※०:०:—

केचनाधिभूतसमुन्नतिमेव सर्वस्वं मन्यमानाः पाश्चात्यशिक्षाशिक्षिता विद्वांस उद्गिरन्ते यत् सनातनधर्मेण सह देशसेवायाः कोऽपि सम्बन्धो नास्तीति, तदिदमेतर्हि मीमांस्यते ।

सनातने धर्मे देशसेवायाः संस्कारो नितरां महत्त्वशाली वैज्ञानिकरहस्य-परिपूर्णश्चेति सनातनशास्त्ररहस्यविदः सर्व एव जानन्ति । सनातनशास्त्रे शरीरं, जन्मभूमिः, समस्तो विश्वश्चेति भेदेन देशस्त्रिधा विभक्तः । प्रथमदशायां साधकः स्वकीयं शरीरमेव देशं मन्यमानः, तत्साहाय्येनैव स्वात्मोन्नतियोग्यता-मधिगच्छति । दशायामस्यामसौ विलासं भोगादिकञ्चावहुमन्यमानोऽपि केवलजन्मभूमिसेवासम्पादनकामनया निजस्वास्थ्यरक्षाद्युपायेन स्वकीयं शरीर-देशं संरक्षति । द्वितीयावस्थायां मनुष्यो निजां जन्मभूमिं हि देशं स्वीकुर्वन् तदीयसेवनया च निःस्वार्थपुरुषार्थशिक्षाद्वारा पुण्यानि संचिनोति । तेषामेव पुण्यानां परिणाम आधिभौतिकी मुक्तिः, देशस्य स्वाधीनता वा गीयते । तेषु किल पुण्यकर्मसु सुरुचिसम्बर्धनार्थं शास्त्राणि प्रतिपादयन्ति—

"जननी जन्मभूमिश्च स्वर्गादपि गरीयसी" ।

तृतीयावस्थायां सर्वोत्तमः परमहंसः सम्पूर्णं विश्वमेव स्वदेशं जानाति । यथाकिल भगवान् श्रीशङ्कराचार्यः सम्मनुते—

"बान्धवाः शिवभक्ताश्च स्वदेशो भुवनत्रयम्"

भगवान् श्रीवेदव्यासोऽपि—

"अयं निजः परो वेति गणना लघुचेतसाम् ।
उदारचरितानां तु वसुधैव कुटुम्बकम्" ॥

नान्यजातिवदियमार्यजातिः रागमोहविद्वेषमूलकमभिमानमाश्रित्य स्वदेशं सेवते। तयेदं विज्ञायते यत् तादृश्यो वृत्तयः क्लिष्टा वन्धनकारिण्यश्चेति। रागद्वेषमोहादिवशेन समनुष्ठितदेशसेवायाः परिणामः साफल्यं गतोऽपि निजमहङ्कारं कर्तृत्वाभिमानं च संवर्धयत्येव। भगवद्गीतायां यथा—

"अहङ्कारविमूढात्मा कर्त्ताऽहमिति मन्यते"

जीवसमष्टिकर्माण्यनुसृत्य सत्यामपि फलाफलपरिणतौ आसक्तियुक्तः कर्त्ता देशोद्धारकार्यं स्वकृतमेवमन्यते। एवमहङ्कारजन्यकर्तृत्वाभिमानो जीवानां बन्धनकारकस्तदधोगतिप्रदश्च। प्रारब्धवशात् कर्मणि सत्यां विफलतायां सकामदेशसेवको नैराश्यसमुद्रे निमज्जन् भग्नहृदयो निजदेशसेवाव्रतमेव बहुशः परित्यजति। यश्चकिल देशानुरागः परकीयदेशद्वेषकः, अर्थात् स्वदेशोन्नतिकृते परदेशमत्याचरति स च परद्वेषमूलकत्वात् तमोगुणमयः, महासंग्रामकारी, सर्वथापरिहेयश्च। यतो हि धारको धर्मः प्रेममूलकसत्वगुणरूपः, द्वेषो हि तमोगुणमूलकः। तमोगुणा नाशकर्त्ता। अतो हि या किल जातिः परकीयदेशात्याचारद्वेषादिद्वारा स्वकीयां श्रियं संवर्द्धयति, सा न कदापि चिरकालस्थायिनीं शान्तिमयीं श्रियमधिकरोति। तस्याः स्वार्थमयेन भीषणात्याचारेण अन्तर्जातीयः संग्रामः प्रादुर्भवति, तेनासौ यथार्थमुन्नतिसोपानं नाधिरोहति। अतो हि पूज्यपादैरार्यमहर्षिभिः आर्यजीवनमभिलक्ष्य मोहरागाभिमानहीनं गीतोक्तकर्मयोगसिद्धान्तमनुसृत्य स्वदेशसेवनोपदेशः क्रियते। यथा च भगवान् श्रीकृष्णचन्द्रो गीतायामुपदिशति—

"कर्मण्येवाधिकारस्ते माफलेषु कदाचन।
माकर्मफलहेतु र्भूर्माते सङ्गोऽस्त्वकर्मणि" ॥
"योगस्थः कुरुकर्माणि संगंत्यक्त्वा धनञ्जय !
सिद्ध्यसिद्ध्योः समोभूत्वा समत्वं योग उच्यते" ॥

आर्यजातीयस्वदेशसेवादर्शलक्षणनिर्णये परधर्मपरजातिद्वेषस्य लेशोऽपि न निभाल्यते। भावमिममार्यजातिर्निन्दनीयं कलङ्करूपमवगच्छति। यथा किल भगवता वादरायणेनोक्तं महाभारते—

"धर्मं यो बाधते धर्मो न सधर्मः कुधर्मतत्।
अविरोधी तु यो धर्मः स धर्मो मुनिपुङ्गव !!"

यच्चु कलियुगे शास्त्रीयवचनान्यनुसृत्य ब्राह्मणार्थं समुद्रयात्रादीनाचारान् केचन निन्दन्ति, तद्धि न किल परकीयजातिधर्मद्वेषतः, प्रत्युत ब्राह्मणानां कृते आध्यात्मिकलक्ष्यसंरक्षणार्थमेवावगन्तव्यम्। या खलु ब्राह्मणजातिः

मोक्षधर्ममेव बहुमन्यते, तया विदेशे किमर्थं गन्तव्यम् ? अध्यात्मलक्ष्यप्रधानाया आर्यजातेः स्वदेशसेवाऽपि आध्यात्मिकलक्ष्य प्रधानैवावगन्तव्या । स्वजातिस्वदेश-सेवनमार्याः परमात्मपूजनं मन्यन्ते । सनातनधर्मावलम्बिनः सम्पूर्णमेव भूम-ण्डलं श्रीमतः परमपितुः परमात्मनो विराड् वपुः, स्वदेशं च तस्य हृदयमिति जानन्ति । मोक्षमेव परमं लक्ष्यमभिमन्यमाना आर्यजाति निष्कामभावतो विराट् पुरुषं समर्चयन्ती पूजनफलाफलं च श्रीजगदीश्वरचरणसरसीरुहेषु समर्प-यन्ती आसक्ति-मोहाहङ्काराभिमानादिक्लिष्टवृत्तीर्दूरतः समुपेक्षमाणा स्वदेशसेवा-जनितं मरणमपि अमृतत्वसोपानमाकलयति । अन्यजातीयनेतारो मोहादिवृत्ति-वशम्वदाः सन्तः स्वदेशवासिनः पुरुषान् निजान् भ्रातॄनभिमन्यमानाअपि स्वकीय-सुखादिपरित्यागरूपं पुरुषार्थमाचरन्तः फलाफलपरिणामं सुखःदुखमनुभवन्ति । आर्यजातेस्तु धर्ममयमध्यात्मलक्ष्यप्रधानं जीवनमात्मैकत्वज्ञानतो जीवमात्रं विशेषतश्च स्वदेशवासिनो भ्रातॄन् अभिमन्यते ।

"ईश्वरो जीवकलया प्रविष्टो भगवानिति"

"ममैवांशो जीवलोके जीवभूतः सनातनः"

सिद्धान्तमिममाश्रित्य स्वदेशं सेवमानेयमार्यजातिः नररूपं नारायण-मर्चयन्ती फलनिरपेक्षा वास्तविकं स्वराज्यमासादयति ।

जीवभावस्य स्वार्थमयत्वात् परेषां हिताधायककर्मणि निरन्तरं निरतः स्वकीयं लौकिकसुखं तृणाय मन्यमानः पुरुषो जगतीतलेऽत्र दुर्लभएव । किन्तु यदि पुरुष एवं विश्वसेत् यत् एतत्सुखदुःखमिश्रितमनुष्यलोकतोऽपि उपरिविरा-जमाना अनेके लोकास्तादृशाः सन्ति, यत्र दुःखलेशहीनं सुखमेव शाश्वतिकं विलसति–यत्र च स्वदेशं स्वधर्मं च सेवमाना मानवा गच्छन्ति, तदा परलोकान् विश्वसन् आस्तिको नरः परार्थं प्राणसमर्पणं परमं वाञ्छनीयं प्रीतिकरं च मन्यते । यतश्च ऐहलौकिकक्षणिकसुखपरित्यागेन पारलौकिकंसुखातिशय-मासाद्यते—इति बुद्धिरुदेति । बृहदारण्यकोपनिषादादौ उन्नतदेवादिलो-केषु मृत्युलोकापेक्षया लक्षगुणाधिक आनन्द उपलभ्यत इति निर्दिष्टम्, यथा—

"यन्नदुःखेन सभिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं च तत् सुखं स्वःपदास्पदम्" ॥

"स्वर्गे लोके न भयं किञ्चनास्ति
न तत्रत्वं न जरया बिभेति ।
उभे तीर्त्वा अशनायापिपासे
शोकातिगो मोदते स्वर्गलोके" ॥

"अश्नन्ति दिव्यान् दिवि देवभोगान्" (गीता)

उत्तररामचरितेऽपि—

"यत्राऽऽनन्दाश्च मोदाश्च यत्र पुण्याश्च सम्पदः।
वैराजा नाम ते लोकाः शाश्वताः सन्तु ते शिवाः"॥

एतादृशस्वर्गलोकेषु कथमिव गति र्भवतीति विषये भगवती गीता व्याहरति—

"हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः।
"यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम्।
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम्"॥
"अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि"॥ इत्यादि

छान्दोग्योपनिषद्यपि—

"ये रमणीयचरणा अभ्यासो
ते रमणीयां योनिमापद्येरन्" इति।

उपर्युक्तकारणकलापेन आर्यजाति र्देशसेवासमनुष्ठानार्थं शास्त्रविरुद्धानुपायान् नानुष्ठातुमर्हति, न वा विधातुमणीयः प्रयोजनमनुपश्यति। यतः—

"यः शास्त्रविधिमुत्सृज्य वर्त्तते कामकारतः।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम्॥
तस्मात् शास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्त्तुमिहार्हसि"॥

इदानीं शास्त्रपरिज्ञानशून्याः केचन नेतारो मानवाः देशसेवादेशोन्नतिकरकार्यकलापेषु शास्त्रसमुच्चयं सनातनधर्मं च बाधकं मन्यन्ते! ते भ्राम्यन्ति! यदि ते आर्यजातीयसत्यसमुन्नतिमार्गमवगमिष्यन्, नैव कदापि एवमवदिष्यन्। एतावत्सुदीर्घकालिकविवादात्परं स्वराज्यसाधनभूताः स्वदेशीयवस्तुव्यवहारादयो ये केचन उपाया निर्दिश्यन्ते, ते सर्व एव संख्यातीतवर्षेभ्यः पूर्वमेव सनातनधर्मशास्त्रेषु प्रथमसदाचाररूपेण उट्टङ्किताः परिदृश्यन्ते। आर्यशास्त्रेषु अनार्यसंस्पृष्टानामपि वस्तूनां देवपितृकार्येषु बहिष्कारो दृश्यते, किमुताऽनार्यदेशीयानाम् वस्तूनाम्। महाराजस्य पाण्डोः अन्त्येष्टिकर्मणि देशीयवस्त्राणाम् व्यवहारो दृश्यते। यथा च महाभारते आदिपर्वणि—

"अथातो देशजैः शुभ्रैर्वासोभिः समयोजनम्।"

देवपितृकार्येषु स्वदेशीयानामेव वस्त्राणामुपयोगः कर्त्तव्यो न पारक्याणामिति आह्निकतत्त्वधृतवचनेनावगम्यते। यद्यथा—

"न स्यूतेन न दग्धेन पारक्येण विशेषतः।
मूषिकोत्कीर्णजीर्णेन कर्म कुर्याद्विचक्षणः" ॥

आर्यशास्त्रसिद्धान्तानुसारं देवतासमर्पणपूर्वकमेव वस्त्राणां परिधानं समुचितम्। देवेभ्यश्च विदेशीयं वस्तु न समर्पणीयमिति स्पष्टमेव विदेशीयवस्त्राणां परित्यागः प्रसक्तः। अन्यच्च, आर्याणां सम्पूर्णं जीवनमेव यज्ञमयमास्ते यथा—

आत्मा त्वं गिरिजा मतिः सहचराः प्राणाः शरीरं गृहं
पूजा ते विषयोपयोगरचना निद्रा समाधिस्थितिः।
संचारः पदयोः प्रदक्षिणविधिस्तोत्राणि सर्वा गिरो
यद्यत्कर्मकरोमि तत्तदखिलं शम्भो तवाराधनम्" ॥
—भगवान् श्रीशङ्कराचार्यः।

अतः स्वकीयव्यवहारकर्मसु परदेशीयवस्तूनामुपयुञ्जनं सर्वथा शास्त्रगर्हितमेव। मन्वादिस्मृतिषु गोवधः अयाज्ययाजनम्, परदारसेवनम्, आत्मविक्रयः, अभोज्यभोजन मित्यादीनि यथोपपातकानि तथा महायन्त्रप्रवर्तनमपि उपपातकमेव निर्दिष्टम्। वांसांसि, वहुविधानि गोधूमचूर्णादीनि पदार्थान्तराणि वा मात्राधिक्येन यैर्यन्त्रैः प्रस्तूयन्ते, तानि महायन्त्राणि प्रोच्यन्ते। एतै र्हि श्रमसामञ्जस्यं प्रणाश्यते, येन धनपतयोऽधिकसम्पत्तिशालिनः प्रभवन्ति श्रमजीवना मध्यमवित्ता मानवाश्च क्षीणा निरन्तरं दरिद्रायमाणास्तिष्ठन्ति। येन देशे अन्तःकलहः, अशान्तिः, रागद्वेषादयश्च प्रादुर्भवन्ति। अनन्तरं तदुद्भूतमहासंग्रामेण जातिर्देशो वा प्रणश्यति। अत एव आर्यशास्त्रेषु महायन्त्रप्रवर्त्तनम् उपपातकेषु परिगणितम्। सर्वेषु च कर्मकलापेषु दशाहीनानां वस्त्राणाम् परित्यागः श्राद्धतत्त्वे उक्तः, तद्द्यथा—

"ईषद्धौतं नवं शुभ्रं सदशं यन्नधारितम्।
अनाहतमिति प्रोक्तं प्रशस्तं सर्वकर्मसु" ॥

आदौ अन्ते च वस्त्रान्तरेण असम्बन्धो 'दशा' इत्युच्यते। दशयासहितं यत् तत् सदशं वस्त्रम्। तादृशमेव दैवपित्र्यकार्ये व्यवहर्तव्यमिति उपर्युक्तप्रमाणाशयः। महायन्त्रेण निर्मितानां सहैव दीर्घाणां वस्त्राणां निर्माणे 'दशा' न तिष्ठति। हस्तनिर्मितवस्त्रे तु सा भवति। अतो दशाहीनानां वाससां वारणा व्याहृता। यजुर्वेदीयश्राद्धतत्त्वोक्तेन—

"आसुरं यन्त्रनिष्पन्नं दैविकं हस्तनिर्मितम्"

इत्यादि प्रामाण्येन यन्त्रनिर्मितानां सर्वेषामेव वस्तुजातानां दैवपित्र्य-कर्मसु व्यवहारो निषिध्यते ।

"क्रव्यादमग्निं प्रहिणोमि दूरम्"

इत्यादिना च अशुद्धमांसोत्पन्न–फास्फरस-समुद्भूत-दीपशलाकादीना-मपि यज्ञकार्येषु बहिष्कारो दृश्यते ।

———

## धर्मशिक्षाप्रवर्त्तनम् ।

——o*o——

श्रुतिमूलस्य धर्मशास्त्रपुराणेतिहासशिष्टाचारपरम्परापरिबृंहितस्य भारतीयानामस्माकं सकलैहिकपारत्रिककुशलैकनिदानस्य महतः सनातनधर्म्म-स्याऽभ्युदयमबाधममिलषताम् सनातनधर्मावलम्बिनाम् केषु चिद्विषयेषु काल-वशतःसमुत्पन्नं प्रतिपत्तिवैषम्यं शाखानुगतविचारालम्बनेन परिहाय सर्व्वथा ऐकमत्येन वर्त्तितव्यमित्यस्मिन्विषये नास्ति कस्यापि प्रेक्षावतो जनस्य वैमत्यम् ।

साम्प्रतं कीदृशानामुपायानामवलम्बनेन तद्वर्त्तनं सुकरमभीप्सितफला-नुकूलं च सम्भवेदित्यस्मिन् विषये, पुरुषमतिवैचित्र्यात् समुत्पद्यमानानां बहु-विधानां विप्रतिपत्तीनां प्रतिदिवसमुपचीयमानः प्रसरो महतापि प्रयत्नभरेण यद्यपि नाधुना निवारयितुं शक्यः, तथापि सन्त्यधुनापि तानि बहूनि कर्त्तव्यानि, येषु सर्वेषामेव सनातनधर्म्मावलम्बिनामस्माकं प्रायेण ऐकमत्यमनायासेन भवि-तुमर्हति, आपाततस्तान्येव कर्त्तव्यानि सामाजिकैः सर्वैरेव ऐकमत्येन दृढतराध्य-वसायेन यद्यनुष्ठितानि भवेयुः, तर्हि महान् खलु उपकारः सनातनधर्म्मावल-म्बिनामस्माकं सर्व्वास्वपि श्रेणीषु अचिरेणैव कालेन समुदियादित्यत्र नास्ति मे अणीयानपि सन्देहलेशावसरः ।

कानि खलु तथाविधानि कर्त्तव्यानि इत्यपेक्षायां प्रदर्शनार्थं आपातत एता-न्येव श्रीमताम् पुरतः संस्थाप्यन्ते,—यथा अस्मदीये समाजे आबाल्यात् धर्म्म-शिक्षायामौदासीन्येन समुपचीयमानस्य नास्तिक्यस्य परिहाराय विद्यालयेषु सर्व्वेष्वेव नियमेन सनातनधर्म्मशिक्षाप्रवर्त्तनम् ।

"धृतिःक्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
धीर्विद्या सत्यमक्रोधो दशकम् धर्मलक्षणम् ॥"

इति भगवता मनुना प्रतिपादितस्य दशलक्षणस्य धर्मस्य जातिवर्ण-निर्विशेषेणानुष्ठानाय सर्व्वेषामेव सनातनधर्म्मावलम्बिनां योग्यतासम्पादनम्, आबाल्यात् सर्व्वेषां कुमाराणां कुमारीणां च सर्व्वजातीयानां सत्यं प्रति ऐकान्तिकस्यानुरागस्य मिथ्याव्यवहारं प्रति विद्वेषस्य च समुत्पादनं, मनसि दृढतया संस्थापनं च, दारिद्र्यादिभिः यथाकालं विद्याम् लब्धुमसमर्थेषु जनेषु सुयोग्योपदेशकनियोगेन रामायणमहाभारतपुराणप्रभृतीनाम् धर्म्मग्रन्थानां सम्यक् तात्पर्यबोधानुकूलव्याख्यानमुखेनोपदेशदानविधिसौकर्य्यं, प्रतिनगरं प्रतिग्रामं सायं प्रातश्च जनसम्मेलनस्थलेषु निखिलमङ्गलहेतुसर्व्वापद्विनिवारणक्षमश्रीमद्भगवन्नामसङ्कीर्त्तनादि प्रवर्त्तनं, सदा सदाचारपरेषु सत्यैकव्रतेषु शास्त्रानुशीलनरतेषु भगवद्भक्तेषु ब्राह्मणेषु सार्व्वजनीनश्रद्धासमुत्पादनम्, गवां सम्यक् प्रतिपालनं, सर्व्वतः संरक्षणं च, 'संघे शक्ति कलौयुगे' इति शास्त्रवचनानुसारेण स्वधर्मसमाजजातिदेशाभ्युदयार्थं सर्व्वेषां सनातनधर्मावलंविनां मनुजानाम् ऐकमत्येन एकप्राणतया च विहितकार्य्यसम्पादनयोग्यतानयनं च, एतानि तावत् कार्य्याणि प्रायेण सर्व्वैरपि सनातनधर्म्मावलम्बिभिः अवश्यानुष्ठेयतया अङ्गीक्रियन्ते । ( संकलितमिदम्—सं० )

———

# ईश्वराभ्यर्थनम् ।

—:०*०:—

( क्रमागतम् )

ये त्वां स्तुवन्ति सदलङ्कृतिशोभिताभि-
र्गीर्भिर्गिरीश सरसाभिरसाभिमानाः ।
ते चारुचित्रमतयो मतयोगयुक्ताः
सम्प्राप्नुवन्ति पुरुषाः खलु गीष्पतित्वम् ॥

ये कर्मणा च वचसा मनसा भवन्तं
दम्भं विहाय जगतीह जना भजन्ते ।
तेषां सुभाग्यमहिमानमुत प्रवक्तुं
वाचस्पतिस्स्वयमपीश्वर नो समर्थः ॥

ये चन्द्रशेखर जना निजनाथभक्ताः
सन्तं लसन्तमिह सम्प्रति भासमानम् ।

त्वां न स्मरन्ति न नमन्ति च नो भजन्ते
ते किन्न खिन्नमनसो निरयान् प्रयान्ति ॥
श्रीविश्वनाथ भवदीयपदारविन्दे
येषां रतिर्न समुदेति मुदेऽति कास्या ।
तेषामहो तनुभृतां दुरितान्वितानां
का दुर्गतिर्भवति सत्यमहं न जाने ॥
त्वामेव देव मुनयोऽनुनयोपपन्नाः
सन्नारदप्रभृतया भृतयोगयागाः ।
रागादिरोगरहिता महिता महान्तः
स्वान्तस्थितं समभजन्त मुदायजन्त ॥
त्वं निर्गुणोऽपि गुणवान् विगताकृतिस्त्वं
प्राप्तोऽपि साकृतिरजोऽपि सुजात एव ।
एकोऽप्यनेक इव सत्कृतिरप्यकर्त्ता,
जीवोऽप्यजीव इति संविदितोऽसि देव ॥
एकस्त्वमेव विधिविष्णुहराभिधानं,
मूर्त्तित्रयं परिविधाय परः स्वतन्त्रः ।
लोकानिमान् किल विलक्षणशक्तियुक्तो,
निर्मासि पासि हरसे भगवन् सलीलम् ॥
तेजोनिधे ! सुरनरासुरयक्षरक्षो-
गन्धर्वकिन्नरभुजङ्गमसिद्धसाध्याः ।
येऽन्ये जलस्थलनभोनिलयास्सजीवाः
त्वद्वीर्यवह्निकणिकाइव ते स्फुरन्ति ॥
पृथ्वीरथस्तरणिचन्द्रमसौ रथाङ्गे
हेमाचलश्च कथितो रथकेतुदण्डः ।
धाता तु सारथिरथ श्रुतयस्तु रङ्गाः
स त्वं रथी विजयसे त्रिपुरासुरारे ॥
देवेश मन्दरमहीधर एव चापो
नागाधिपश्च सुगुणो जलधिर्निषङ्गः ।
नारायणस्तु विशिखः परमः प्रसिद्धो
धन्यो भवान् विजयते जगदेकवीरः ॥
अष्टौ दिशो हि वसानानि तवाष्टमूर्त्ते
तद्रक्षिणः शतमखप्रमुखाः सुराश्च ।
तावत्य एवमपि सिद्धय एव दास्यः
तस्माद् भवानखिलदेहभृतामुपास्यः ।

---

# अद्यत्वे समर्घतायामपि कथमिवाऽशान्तेस्साम्राज्यम् ?

प्रबन्धा--श्रीदीनानाथशर्म्मा सारस्वतशास्त्री ।
( 'मुलतान'स्थ-स० ध० संस्कृतमहाविद्यालयाऽध्यापकः )

कालस्य विचित्रा गतिः। सा च क्षणक्षणविलक्षणा प्रतीयते। कालाऽधिकृतौ यदि दिनं प्रवर्त्तते; तदा रात्रिरपि भवति तेन सध्रीचीना। दिनेऽपि न दृश्यते तुल्यता। प्रातर्य एवाऽसौ भास्करः पक्वबिम्बफलाकारः स्पृहणीयो वा प्रतीयते; स एव मध्याह्ने प्रखरकरनिकरयुक्तश्चण्डताम्प्राप्य वपूंषि दन्दग्धि; असह्यश्च भाति। स एव पुनः सायं हततेजा भूत्वा 'पतनान्ताः समुच्छ्रयाः' इति चरितार्थयँश्चक्षुष्पथादपेतो भवति। अयमेव परीवर्त्त ऋतूनपि न जहाति। दृश्यताम्—यदा हेमन्त उन्नतिकोटीमाटीकते; तदा शनकैर्ग्रीष्मकारणान्यपि आविर्भवन्ति। कतिपयैरेवाऽहोभिश्शैत्यं क्रमशः क्षीणतामश्नुवानं सन्नामशेषमेति। यद्यपि शैशिरः पवनोऽपि नैजप्रभावं दर्शं दर्शं मध्ये प्रवर्त्तते; परं तस्याऽपि परीवर्त्तो भवति। मन्दं मन्दं वसन्तस्य नूतनानामाशानां, नवानां पल्लवानां नव्यसौरभस्य च हेतोस्सत्त्वजातं हैमनपवनाऽवच्छिन्नशीतस्य असह्यक्लेशराशीन् क्रमशो विस्मरति।

अहह! य एव पुनर्वसन्तोऽभितो हारित्यमुद्भाव्य चक्षुषोरासेचनकरो भवति; आरामेषु वसन्तं विलसन्तं सन्तश्च तमेव वसन्तं ग्रैष्मो घर्मो निर्व्वासयति। भगवान् भास्वान्—, यदीयं ज्योतिश्शीतर्त्तौ कुज्झटिकातः काठिन्येन प्रकटीभवतिस्म—इदानीं स्वप्रखरतरकरैः संसारम् असारमिव कर्त्तुं, दग्धुं प्रावर्त्तिष्ट। यत्र शीतत्रायक-नीशारप्रभृतिवासांसि वसाना अपि सीत्कारपरा नरा भवन्तिस्म; तत्रैतर्हि हिमजलं व्यजनानि चोपयोक्तुमापतन्। शीतकालस्थ ऊर्णावस्त्रपरिधानविचारोऽपि क्वाऽपि व्यलेष्ट। शीतकालिकसणसणायमानहैमनपवनस्थानम् उष्णवायुर्जग्राह। उदन्यया तालुनश्शोषः प्राणानाञ्च कण्ठापकण्ठता* उपास्थित। नदीनदाश्शोषम्, तरवो म्लानिं प्राणिनश्च हाहाकारं प्रपेदिरे। इत्थं सुबहु कदर्थयित्वा भीष्मः खलु ग्रीष्मः स्वयमेव स्वविनाशकारणमजनि।

अमुङ्खलु घनघनाघनाऽवच्छिन्ना प्रावृड्व्यपोहति। उष्णवायुर्व्बहुधा पेषीद्; यद्—मेघा उड्डाय्य दूरीक्रियेरन्; तदर्थं स्वबलप्रयोगमपि विधातुं बद्ध-

* 'उपास्थित'। 'अकर्मकाश्च' १।३।२६ इति तङ्।

परिकरोऽजनिष्ट; परम् अमोघा मेघा वृद्धिमेव प्रापद्यन्त । प्राणिन आनन्दुः, मेघांश्च प्रत्यैक्षिषत । धारासम्पात उपक्रान्तः, वर्षञ्जातम्, प्राणिनश्शीतला जाताः, म्लाना वृक्षास्तदीयकिसलयानि च परमाऽद्भुतहारित्यं प्रपेदिरे, दुःखमयश्शूलप्रदश्च ग्रैष्मो घर्मश्शान्तिमशिश्रियत्, लोकानां मनांसि प्रफुल्लानि जातानि । ते च जना नवीनोत्साहेन कर्म्मक्षेत्रेऽवतीर्णाः ।

परं पुनः प्रावृडपि शरदृतुमुद्यन्तं निरीक्ष्य पलाय्य क्वाऽपि निलीयते । शरच्च हेमन्तशिशिरे†; ते च वसन्तं वत्स्यन्तं वीक्ष्य जिह्रीतस्तिरोधीयेते च । न केवलमियमत्रैव दशा विराजते; प्रत्युत सर्व्वस्यां सृष्टौ सर्व्वेषु प्राणिष्वपि च एतदधस्थ्यमखिलद्भ्यीभवति । सृष्ट्यारम्भे सरलाऽवस्था मुग्धा जनाः, आवश्यकतानां नैयून्यम्, परिपूर्णतागभीरतयोराधिक्यम्, तस्मादेव कारणात् सन्तोषस्य प्रेम्णश्शान्त्याश्च प्राज्यसाम्राज्यमभ्राजत । क्रमशो यथा यथा मनुष्यसङ्ख्या वृद्धिमासीदत्; तथा तथा आवश्यकता अपि वरीवृधां प्राप्ताः । स्वकीयाऽभावपूर्त्त्यर्थं सर्वे सचेष्टतामशिश्रियन् । परस्परं सङ्घर्षस्य वैमनस्यस्य चाऽभिव्यक्तिरजनि । अस्या एव अवस्थाया नाम अद्यत्वे 'उन्नति' रित्यस्ति । सन्तोषस्थाने तृष्णा, प्रेमस्थाने द्वेषः शान्तिस्थाने अशान्तिरदभ्रमभ्राजत* । न केवलं प्राणिजाते, प्रत्युत यावद् व्यवहारमात्र एव ईदृग् दिग् दृष्टिगोचरं प्रपन्ना ।

फलतः कदाचिद् व्यापारेऽपि महार्घतायास्साम्राज्यम्भवति; जातुचिच्च समर्घतायाः । महार्घता च यदा प्रसेस्नीयते; तदा साधारणजनताया हाहाकारोऽभितश्शोश्रूयते; यद्—'भक्षणार्थं सौलभ्येन न मिलति किञ्चिद्; भूयान् व्ययो भवति' नेतनं न किञ्चिदवशिष्यत इति" । इतश्च नेतारोऽपि व्याख्यानमञ्चमधिष्ठाय उच्चैश्चीत्कुर्व्वन्तोऽभिप्रयन्ति; यद्—"हा दरिद्रं भारतम् । भारतीया वहव ईदृशो विद्यन्ते, ये वराका अशनायन्तः सन्त उदरे प्रस्तरं बद्ध्वा इतस्ततः पार्श्वपरिवर्त्तनेन क्षपाः क्षपयन्ति । तेषां करुणक्रन्दनं विदारयत्यास्माकीनमनांसि—" इत्यादि ।

कदाचिच्चेदमवस्थाया अपि परीवर्त्तो जायते; यथा—अद्यत्वेऽजनि । पूर्व्वं यो गोधूमस्सप्तभीरूप्यकैश्चत्वारिंशत्सेटकपरिमाणको मिलतिस्म; स

† हेमन्तशिशिरे । द्वन्द्वत्वात्परवल्लिङ्गता ( क्लीवता ) । हेमन्तशिशिराविति पूर्व्ववल्लिङ्गता तु छन्दसि ।

* अत्र केचिद्भावाः पुस्तकान्तरादात्ता । ले० —

एवाऽद्यत्वे एकेन सपादेन सार्द्धेन युग्मेन वा रूप्यकेण प्राप्यते ×। यच्च घृतं प्राग् एकरूपकस्य अर्द्धसेटकादपि न्यूनं विक्रीयते स्म; तदेवाऽद्य एकसेटकमितं विक्रीयते। वर्त्तमानसमयात् पञ्चषेभ्यो वर्षेभ्यः प्राग् लोकाः प्रत्नसमयमित्थं समालोचयन्ति स्म; यद्—"व्यतीते बहुतिथे काले गोधूमो रूप्यकद्वयेन एकमणमितो मिलतिस्म; परमद्यत्वे पञ्चरूप्यक्या सप्तरूपक्या वा मिलति, हा महार्घतासमयम्।" इति। यदा चैतर्हि रूप्यकद्वयादपि समर्घो जातो गोधूमः, तर्हि युक्तन्त्वेतदासीत्, यदधुना प्राक्कालिक्याश्शान्त्यास्साम्राज्यमभविष्यत्, परं हा हन्त! ईदृक्षायां समर्घतायामपि न शान्तेः प्राज्यं साम्राज्यम्। अद्य लोका ब्रुवते—"ईदृशीं समर्घतां धिक्। अस्यास्तु सा महार्घताऽपि श्रेयस्यासीत्। अद्यत्वेऽस्माकं पार्श्वे प्राग्वद् रूप्यकाणामपि सञ्चयो न भवति। किञ्चित्कृत्यं न प्रचलत्यद्यत्वे। हस्तोपरि हस्तं दत्त्वा कालकर्त्तनं विदध्म इति॥"

पाठकाः श्रीमद्भिरपीयमवस्था कदाचिदनुभूतचरी स्यात्। तत्रैतद् विमर्शनीयम्, यत्—प्राक्कालेऽपि समर्घता बभूव, यस्मिन् काले इयं भरतभू रत्नगर्भा मेने। अद्याऽपि समर्घता विराजते; यस्मिन् धनापेताऽसौ मन्यते। किमिदम्? मध्यस्थकाले यैरेव महार्घता नेनिन्द्यते स्म; तैरेवाऽद्यत्वे महर्घता उच्चैःकारं* तोष्टूयते; समर्घता च नीचैःकारम्* आख्याय घृणास्पदं मम्मन्यते—अत्र किङ्कारणम्? किमु श्रीमद्भिरत्र कदाचन विवेचना कृता? यदि नहि; तदा विश्वद्रीचि प्रश्नेऽस्मिन्नस्मत्सहाया भवन्तो भवन्तो विविशन्तु।

तत्र मन्मतौ त्वयं विचार उत्तिष्ठते= यद्—यद्यप्यद्यत्वे समर्घता जागर्त्ति; यया प्रसन्नया भाव्यमासीज्जनतया; परं सर्व्वथा विमनायतेऽधुना; तत्र (विमनस्कत्वे) कारणं समर्घता नास्ति; प्रत्युत अस्माकम् आवश्यकताबाहुल्यं समजनि विज्ञानबहुलेऽस्मिन् युगे; येन अस्माभी रूप्यकाणां सञ्चयोऽपेक्ष्यते। बत! इदं रूप्यकयुगं जागर्त्ति अद्यत्वे। प्राक्तनकाले रूप्यकयुगम् आवश्यकताबहुलं वा युगं नाऽजागः। तेनैव तदा शान्तेः साम्राज्यपिं विरराज।

× अधुना यद्यपि किञ्चिन्महार्घतामापन्नो गोधूमः, तथाऽपि एतन्निबन्धबन्धनकाले एवमासीद्, यथाऽस्माभिरुपरि प्रतिपादितम्।

* उच्चैःकारं नीचैःकारम्। 'अव्ययेऽयथाभिप्रेताख्याने कृञः' इति णमुल्। अयथाभिप्रेतं नाम अप्रियस्योच्चैः प्रियस्य च नीचैः कथनम्।

= उत्तिष्ठते विचारः। 'उदोऽनूर्ध्वकर्म्मणी'ति तङ्।

अद्यत्वे उत्तरोत्तरं जायमानो नव्याऽऽविष्कारभूमाऽऽस्माकीराकाङ्क्षाश्चिन्ता वा अपनयति तु न; प्रत्युत दैनन्दिनं कन्दलयत्येव। नव्याविष्कृतपदार्थाश्च इत्थं सौन्दर्य्यभाजो भवन्ति; येनाऽऽलस्यापन्नः पुरुषस्तद्-ग्रहणे स्वयमेवाऽऽकृष्टो भवति। इतश्च ते हि पदार्थाः स्वल्पयाऽप्यसावधानतया विनश्यन्ति परं तद्-व्यसनवशात् तदाश्रयापादाच्च पुरुषस्तद्-ग्रहणाऽऽवश्यकता प्रसरीसर्त्ति। तदभावे च स्वयं प्राच्या दिशा कार्य्यनिर्व्वहणप्रसङ्गे श्रमोऽवसीयते; अहस्तपादाँश्च मन्महे तदा स्वान्। इत्थमेव व्ययभूयिष्ठता पम्फुल्यते।

एतदुक्तम्भवति—यावती अधिभौतिकविज्ञानस्य उन्नतिर्भविष्यति; अशान्तिराकाङ्क्षा वा तावतीं मात्रां प्रचण्डताञ्च उत्तरोत्तरं स्पृदयति। यदि प्राचि युगे एतावान् आधिभौतिकता प्रचारो न विरेजे, तत् तत्र शान्तेरपि साम्राज्यं विराजतेस्म। वस्तुतो याऽद्यत्वे उन्नतिनाम्ना व्यपदिश्यते, साऽवनतिरेव; इयं हि पयायमानो× वह्निरेव। कियत्यश्चिन्ता जाग्रत्यद्यत्वे, कियन्ति कार्य्याणि समवर्द्धिषत, कीदृक्षा च दुरवस्थाऽधुना विलसति? को नाऽनुभवत्यहरहरेतद्। यावत् क्रियते सर्व्वं कृत्य जातम्, तदुन्नतिप्रेप्सायै एव। परमस्यामुन्नतिप्रवाहपरम्परायां कस्य सुखम्? कस्य वा सन्तोषः? यथा यथा उन्नतिं प्रति सन्निहिता भवामः; तथा तथा दरिद्रता, कलहः, चिन्ता, आलस्यं विविधकदर्थनाश्च भृशायन्ते। यदा चेयमाधिभौतिक्युन्नतिरतिमात्रां मात्रां नाऽस्प्राक्षीदधिभारतम्; तदाऽपि किमु भारतमीदृग्विधदुरवस्थाऽवलीढं वव्रृते? परिश्रमभीरुत्वं वोवाह? इत्थं वा दरिद्रतापरिष्वक्तमासामास? एवमेव किमु दीनं हीनं क्षीणं वा बभूव? नहि नहि कदाऽपि नहि। यथैवेदानीन्तनी वृद्धिः प्रसेस्नीयते; तावत्येव कदर्थनाऽपि प्रसरत्येव।

प्राक्काले यस्याऽन्तिके यावदधिको गोधूमो यावद् वाऽधिकं घृतम्भवतिस्म, नितरां हर्षायमाणः+ स धन्यम्मन्यो भवतिस्म। परमद्यत्वे? अद्यत्वे तु यस्य पार्श्वे यावदधिको गोधूमः, स तावानेव दरिद्रः, तावतीनामेव चिन्तानां निलयः। अद्यत्वे रूप्यकसञ्चय इष्यते जनैर्न तूदरपूरणम्। एतर्हि

×हर्षायमाणः। लोहितादित्वात् क्यष्। हर्षादयो वृत्तिविषये तद्वति वर्त्तन्ते। भाष्यवार्त्तिकमते त्वत्र भृशादित्वात् क्यङेव।

+पयायमानः। 'कर्त्तुः क्यङ् सलोपश्च' 'अकृत्सार्वधातु—' इति दीर्घः, सलोपस्त्वत्र वैभाषिकः।

आडम्बरः सिसेविष्यते*, नतु साधारणम्। इदानीं न जनाः† क्षीरस्यन्तो दधिस्यन्तः सर्पिष्काम्यन्तो वा, प्रत्युत द्रविणीयन्त एव। दशामिमां वीक्ष्य चित्रीयामहे। लोकोऽभिधत्ते; यद्-अस्माभिर्व्यासपयानयात्रा विधेयाः, =अप्सरायमाणानां स्वपत्नीनां कृते उच्चपार्ष्णिमत्य आङ्गलोपानहो विविधसौन्दर्य्यभाञ्जि वासांसि, विविधभङ्गीमन्ति सुवर्णभूषणानि; बालकानाञ्च कृते विचित्राणि क्रीडनकानि, स्वयञ्च—

"हैटश्च कोटं पतलूनकञ्च
पेटी रुमालो नकटाइ, 'वो' च।
न्यूफ्रेम ऐनक् च घड़ी छड़ी च
कालर् कमीजं बटनस्टडौ च॥
पौडर् च जुल्फेङ्ग्लिशकेशवेशः
सुपालिशो बूटवरश्च जुर्राब्।
मफ्लर् च चुर्टञ्च, लवेण्डरोऽपि
सैकल् च बैट्री परिषेवणीयाः॥"

—एतानि सभ्यताचिह्नानि धारणीयानीत्यादि। तत् कुतो न समर्घतासमये इत्थमुन्मनायमानानामेषामशान्तिः स्यात्। समर्घतासमये च सर्व्वेषु कार्य्यविभागेषु वेतनं न्यूनीक्रियते; बहवश्च कर्म्मकरा अपसार्य्यन्ते। ये च स्वयं राजानन्तः* एतत्परिणतिमजानन्त उपर्य्युक्तवेषभूषाव्यसनिनस्तेषामथ च† धनायतो धनीयतश्च व्यापारिसमूहस्य—यो वञ्चक इव परस्वं स्वं विधित्सति—समर्घता हानिं विधत्ते, नतु साधारणानाम्। ते (साधारणाः) त्वीदृशमेव समयं× सदा स्पृहयन्ति। महार्घतैव तेषाङ्कृते शत्रूयिता॥ यद्यपि महार्घतायां रूप्यकवृद्धिर्जायते, समर्घतायाञ्च न तथा; तथाऽपि

---

*सिसेविष्यते। सन्नन्तात् सेवतेः कर्मणि रूपम्। 'स्तौतिण्योरेवे'ति नियमान्न षः।

† क्षीरस्यन्तः। 'अश्वक्षीरे'त्यात्मप्रीतौ क्यचि असुक्, पररूपम्। दधिस्यन्त इत्यत्र तु 'सर्व्व प्रातिपदिकाना'मिति सुक्।

=अप्सरायमाणानाम्। 'ओजसोऽप्सरसो नित्यं' स लोपः।

*राजानन्तः। राजान इव आचरन्तः। 'सर्वप्रातिपदिकेभ्यः क्विब्वावक्तव्यः।' 'अनुनासिकस्य क्वी'तिदीर्घः भाष्यमते तु हलन्तेभ्य आचारक्विब् नास्ति।

† धनायतः। गृध्यतः। 'अशनायोदन्यधनाया' इति क्यचि ईत्वाभावो निपात्यते। गर्द्धाऽर्थाऽभावे तु 'धनीयतः' धनमात्मन इच्छतः।

× समयं स्पृहयन्ति। 'कर्तुरीप्सिततमत्वात्' कर्म्मत्वम्। ईप्सितत्वे तु सम्प्रदानम्।

महार्घत्वे व्ययभूयिष्ठताऽपि पुनर्जायते, समर्घतायाश्च न तथा। रूप्यकवृद्ध्यर्थ-मेव महार्घतेऽस्त्ववस्तु—

"त्रिष्वसमासु प्रक्षीणायाः
सद्यो मृत्युर्जातोऽस्वायाः।
प्रासोष्ट द्राक् पुत्रञ्जाया
इसका बट्टा उसमें आया॥"

इत्युक्तिं 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायं वा स्मरन्तु।

अथ चाऽत्र विषये वयमीदृक्षसमये विलालप्यमानानां व्यापारिणामपि महिष्ठं दोषं पश्यामः। तैरेतद् विचारणीयम्; यद्व्यापारस्य, वैशिष्ट्येन गोधूमस्य समर्घता-कारणन्त्वेतदस्ति, यद्-अधुना यथापूर्वं गोधूमो विदेशान् प्रति नो गच्छति। तत्रत्यै 'रूस' राष्ट्रप्रभृतिभिः स्वदेश एव शस्यस्याधिक्यं व्यधायि, कर्णाकर्णिकया श्रूयते, यद्-'रूसप्रदेशेत्वधुना द्वादशानक्या एव एकमणमितो गोधूमः प्राप्तुं शक्यते। परं व्यापारिमहाशयास्तु पूर्व्वस्व-प्नानेव पश्यन्ति, यत् कदाचिद् गोधूमो यथापूर्व्वं महार्घः स्याद्। अत एव ते स्वपार्श्वस्थं प्रभूतमपि गोधूमं न विक्रीणते। यदा च तदिच्छाऽनुरूपं महार्घता न भवति, तर्हि चिरकालमवस्थापनाद् विकृतिमापन्नो गोधूमो यत्र तत्र अपे-क्षितमूल्यादपि समर्घो विक्रेतुं पार्य्यते। तत एव यत्र तत्र समर्घता जागर्त्ति। पाठकाः! किं नेयं वञ्चकता? वञ्चकानां शिरस्सु किं शृङ्गाणि भवन्ति? फलमपि च पुनस्तादृशं भवति। अहन्तु मन्ये समर्घतया सर्व्वस्तुष्यति ऋते विभागद्वितयात्। तत्र प्रथमो विभागस्तु व्यापारिणाम्, द्वितीयश्च नव्यस-भ्यानाम्। तत्रोभाभ्यामेवेदं विचार्य्यम्, यद्-येन कृत्येन समृद्ध्या लाभस्स्यात्; व्यृद्ध्याश्च हानिः, तदेव कर्त्तव्यं कर्त्तव्यं भवति। अत एव ताभ्यां महार्घतार्थं दैनन्दिनं परमेश्वरप्रार्थना त्यज्यताम्; किन्तु समर्घतार्थमेव परमेश्वरस्तोष्टू-यताम्। तत्र व्यापारिणस्तु गोधूमाद् इतरधान्यानामपि व्यापारं कुर्व्वन्तु, येन तेषां लाभोऽपि स्याद्; इतरेषामपि। 'बाबू' वृन्दाय च एतदुचितम्; यत् तन्मण्डलो व्यर्थव्ययं कृत्रिमसौन्दर्य्यञ्च ( Fashionable ) क्रमशो जह्यात्। तेषामेव आदर्शं दर्शं दर्शम् एव तेषां कुमारा अपि कुमारायन्ते *। तथैव

* कुमारायन्ते। कुमार्य्य इवाचरन्ति। क्यङि 'क्यङ्मानिनो -श्च' इतिपुंवत्वेन ङीपो निवृत्तौ दीर्घः।

(कुमारीणां सदृशा) दिशा धम्मिल्लरचनाव्यापृता विविध-महार्घतालभ्य-तैल-प्रयोगैः—कृष्णानपि केशान् बभ्रूकुर्वन्तो विचित्रं क्षौरं कारयन्तस्तथा विविधानि शीघ्रं × नष्टुमर्हाणि जापानादिप्रणीतक्रीडनकानि च क्रीणन्तः सन्तः—पितृव्ययं वर्द्धयन्ति। तत्पत्नीनां तु का कथा। वेश्यानां तासां मध्ये च सुपरिणवेषेणाऽपि अन्तरं न प्रतीयते। प्रतिप्रमासि तासां भूषणभङ्गी भङ्गमापद्यते, नव्यताञ्च गाहते। हा! कियान् खेदः। ता एव श्रीमत्य इमं सर्वश्चिदाडम्बरं गृहाद् बहिरेव कुर्वन्ति जनान् कलुषिताऽऽशयानिव कर्त्तुम्; गृहे तु तासामीदृक् साधारणी मलिनवासस्सम्बलिता वेषभूषा भवति; यां दृष्ट्वा निर्द्धनस्त्रियोऽपि विस्मयस्मेरा भवन्ति। अत एव यदि 'बाबू'दलं स्वकीयं व्यर्थव्ययं परिजिहीर्षेत्; स्वकीयाश्च दैनन्दिनीरावश्यकता ह्रसयेत्; तत्पत्न्योऽदसीयसूनवश्च तदनुसारं वेषे साधारण्यमङ्गीकुर्य्युः, तर्ह्यद्य या समर्घता तान् दुःखाकरोति; सैव पुनः सुखदायिनी भविष्यतीत्यस्माकं सुदृढो विश्वासः।

(क्रमशः)

---

## अन्यद्भुक्तमन्यद्वान्तम्।

---

अयि पाठकमहानुभावाः! पेषम एव गयाक्षेत्रे वैष्णवद्वैतसिद्धान्तप्रतिष्ठापनाचार्य्याणां श्रीमन्माध्वाचार्य्यपीठाधिष्ठितानां वैदिकसिद्धान्तप्रचारणे बद्धपरिकराणामुत्तरादिमठाधीशानां श्रीमत्परमहंसपरिव्राजकाचार्य्याणां श्रीमत्सत्यध्यानतीर्थमुनीन्द्राणां वदनसरोजाद्विनिर्गतं वाक्तरङ्गिणीलहरीलेशं सङ्कलय्य पण्डितनारायणाचार्य्योऽद्वैतमतविमर्शो नाम निबन्धो मुद्रापयित्वा पर्य्यवेषयत्। तदाशयश्चैषः—अद्वैतमतमवैदिकं, भगवान् शङ्कराचार्य्यस्तु बुद्धावतारः, तदुपदेशाश्च सर्वजनमोहसमुद्भावकाः, भस्मत्रिपुण्डादिसेवनमश्रेयस्करं, द्वैतमतन्तु वैदिकं सर्वेषां श्रेयस्करञ्च।

अत्र महती मीमांसा समुदेति विदुषामन्तरात्मनि, परन्तु समयस्य, सहायकस्य दौर्बल्याद्वा, उक्तमठाधीशानां गौरवाद्वा, शुष्कवैमनस्यवैरस्याद्वा, न परमार्थतो मीमांसितुमग्रतः पदं निदधाति मदीया शेमुषी। सत्यप्येवं

---

× 'नंष्टुम्,। 'मस्जिनशो' रितिनुम्।

सप्रश्रयं तानेव महानुभावानभ्यर्थयामि; यदेवंविधे निबन्धे समुचितो वेद-मन्त्राणां सर्वत्र प्रमाणत्वेनोपन्यासः। तत्र न तावद्भगवतः शङ्कराचार्य्यस्य बुद्धावतारत्वे, तदुपदिष्टस्याऽद्वैतसिद्धान्तस्याऽवैदिकत्वे, भस्मादिधारणानाम-श्रेयस्करत्वे, द्वैतसिद्धान्तस्य वैदिकत्वे, अलौकिकश्रेयस्करत्वे, चैकोऽपि वैदिको-मन्त्रः प्रमाणत्वेन स्वीयनिबन्धे समुद्धृतः। शङ्कराचार्य्यस्य बुद्धावतारत्वे, तदभिमतस्याऽद्वैतसिद्धान्तस्याऽवैदिकत्वे, भस्मादिधारणस्याऽश्रेयस्करत्वे, द्वैत-सिद्धान्तस्य वैदिकत्वे च यान्यपि वचनानि पुराणतः समुद्धृत्य समुद्धृतानि तान्यपि यस्य मण्डपस्तस्य गीतमिति लौकिकाभाणकानुरोधेन पक्षपातेन सम्भृतानीति। यदि तु सर्वथाऽद्वैतमतमवैदिकमेव तदा पुराणान्तरेऽपि तस्याऽवैदिकत्वोपपादकप्रमाणान्तरोपलब्धिरवश्यमेव स्यादिति।

किञ्च 'अभावज्ञानं प्रति प्रतियोगिज्ञानस्य कारणत्वम्' इति नियम-मनुरुध्याऽद्वैतमतस्य कतिपयाऽर्थवादवचनातिरिक्ते स्थलेऽवश्यमेव वैदिक-त्वेन सिद्धान्तितत्वमवगम्यते। उक्तमहानुभावानां प्रमाणाभाववतो निबन्ध-स्य निरसने प्रमाणं सर्वथानुपयुक्तमेवेति नाऽत्र प्रमाणोपन्यासे मनागपि प्रयासः, समुपस्थिते च तदवसरेऽद्वैतमतस्यैव वैदिकतां समर्थनेऽन्तरेण प्रयासं प्रभुत्वं विद्योतते बहूनां विदुषामन्तरात्मनि।

यत्त्वद्वैतविमर्शनिबन्धस्य द्वितीये प्रकरणे बौद्धविज्ञानवादस्याऽद्वैत-वादेन साम्याद्भगवान् शङ्कराचार्य्यो बुद्धावतार इति समर्थितं तदन्धस्यैवा-न्धलग्नस्येति न्यायानुसरणात्परमानुचितम्। अवसन्नेऽपि पूर्वस्मिन्राजनि तन्नीतिरीत्यादयोऽवश्यमेवावशिष्यन्ते। एवं बौद्धमतानन्तरं प्रथितेऽद्वैतसिद्धान्ते बौद्धसिद्धान्तस्य तद्घटकत्वेनाऽवस्थानं समुचितमेवेति। बौद्धमते विज्ञान-तत्त्वं क्षणिकमद्वैतसिद्धान्ते तु नित्यमिति भेदस्य सुस्पष्टत्वमेवेति। एवं बादरायणसंसर्गेणैक्यसंयोजने रोजा-चान्द्रायणव्रतयोर्मासावधिकत्वेन तत्सेवनपरयोर्हिन्दूयवनयोरप्यैक्यं सुस्पष्टमेव स्यात् एतेनापरेषां प्रकरणाना-माक्षेपाः निराकृताः। अहो मद्विधा अपि नान्यं कमपि निन्दयन्ति तथावि-धानां महानुभावानां कथमत्र प्रवृत्तिरित्याश्चर्य्यकरम्। स्व-परमतयोर्वैदि-कत्वाऽवैदिकत्वोपपादने बद्धपरिकरैरपि पक्षपातपरायणानि पुराणवचनान्येव प्रमाणत्वेनोपन्यस्तानीति समर्थयत्येवान्यद्भुक्तमन्यद्वान्तमिति।

—श्रीगिरिजानन्दमिश्रः।

---

उपाकर्म्मप्रकरणीय—

# निर्णयसिन्धुग्रन्थव्याख्या* ।

पण्डितवरेण्य श्रीमत्पञ्चाननतर्करत्न भट्टाचार्य्यमहाशय-प्रणीता ।

——०*०——

## भूमिका ।

हेमाद्रिमदनपारिजातमाधवीय-पराशरभाष्य-पारस्करगृह्यसूत्रगदाधर-भाष्यकालतत्त्वविवेचन–समयमयूख-स्मृतिकौस्तुभादि–प्रामाणिक–निबन्धपर्य्यालोचनयेदमेव लभ्यते–पूर्णिमादावेवाद्धर्द्धरात्रादधस्ताद् ग्रहसंक्रान्त्योरन्यतरयोगे तत्र नोपाकर्म्मानुष्ठानमिति । धर्म्मसिन्धु-पुरुषार्थचिन्तामण्यादि-ग्रन्थानुसारेण निर्णयसिन्धुतात्पर्य्यमाकलयद्भिर्विद्वद्वृन्दैः पूर्णिमादिनेऽर्द्धरात्रादधस्तात् पूर्णिमायामविद्यमानोऽपि ग्रहसंक्रान्त्योरन्यतरयोग उपाकर्म्मनिषेधक इति प्रत्यपादि । तत्र पूरुषार्थचिन्तामणिसम्मतमार्गे लक्षणाया आश्रयणात्तस्याश्च जघन्यवृत्तित्वात् स मार्गो सुधीभ्यो न रोचते । कैश्चित्तु लक्षणामनाश्रित्य "यस्योभयं हविरार्त्तिमार्च्छेत् । ऐन्द्रं पञ्चशरावमोदनं निर्वपेदि"ति वाक्यविहितं प्रायश्चित्तं यथैकतरहविर्नाशेऽपि भवति, निमित्ततावच्छेदकलाघवानुरोधेन उभयत्वस्य निमित्ततावच्छेदककोटावप्रवेशात् तथा हस्तश्रवणपर्वणां वचनेषु श्रूयमाणत्वेऽपि लाघवानुरोधेन तेषां निमित्ततावच्छेदककोटावप्रवेशेन हस्तश्रवणपर्वस्वविद्यमानोऽपि अर्द्धरात्रादधस्ताद्वर्त्तमानो ग्रहसंक्रान्तियोग उपाकर्म्मदूषको न तु हस्तश्रवणपर्वस्वेव विद्यमानः ।

'उपाकर्म्म न कुर्वन्ति क्रमात्सामर्ग्यजुर्विदः ।
ग्रहसंक्रान्तियुक्तेषु हस्तश्रवणपर्वसु ॥'

इति वाक्यस्य लिङाद्यघटिततयाऽर्थवादत्वेन तत्रत्यानां हस्तश्रवणपर्वणामविवक्षायां क्षतिविरहाच्चेत्यभाणि । तत्र हविरार्त्त्यधिकरणन्यायावतारणं तावदसमञ्जसम् । तथा हि भाट्टदीपिकायाम् [ ६।४।६ ]

"वस्तुतस्तु उभयार्त्तिरेवात्र निमित्तम् । न च तस्यापि नित्यत्वान्निमित्तत्वानुपपत्तिः, प्रकरणादेव हविर्विशेषविषयत्वोपपत्तेः । इतरथा भवन्मतेऽपि दधिपयोविषयत्वानुपपत्तेः । अतो दोहद्वयनाश एवेदं प्रायश्चित्तम्, हविः पदं त्वविवक्षितम् । अधिकरणं तु हविः प्राप्त्यभावं

* भवानीपशिकोऽप्ययं प्रबन्धः संग्राह्य इति प्रकाशितः । —प्रकाशकः ।

कृत्वाचिन्तया । वस्तुतस्तु पक्षद्वयेऽपि न हविरादिपदे लक्षणा सर्वेषां पदार्थानामाख्यातार्थान्वयोत्तरं पश्चात्परस्परान्वयोपपत्तेः । एवं च विशिष्टस्य निमित्तत्वानादरो निमित्ततावच्छेदकगौरवभियाऽन्यतरविवक्षयाऽपि निमित्तश्रुत्युपपत्तेरन्यतरपदस्य चाधानवाक्यगतपुंस्त्वस्येवानुवादत्वेनाप्युपपत्तेश्चेति द्रष्टव्यः ।" इति । एवं च तत्रान्यतरहविर्नाशे प्रायश्चित्तमिदं वक्तुमशक्यम् । एकैकहविर्नाशे पृथक्प्रायश्चित्तस्योक्तत्वात् । उभयत्वस्य तत्र प्रकरणप्राप्तत्वेन निमित्ततावच्छेदककोटावप्रवेशेऽपि उभयहविर्नाश एवेदं प्रायश्चित्तं भवति नत्वन्यतरहविर्नाशे । तस्मादत्र हविरार्त्यधिकरणन्यायोपन्यासोऽनवसर एव । 'उपाकर्म्म न कुर्वन्ती'ति वचनस्य निर्णयसिन्धुकृता स्वयमेव निषेधत्वकथनेन निषेधार्थवादयोर्भिन्नत्वस्य मीमांसाशास्त्रसिद्धत्वेन तस्यार्थवादत्वकथनं वक्तॄणां स्वोपजीव्यविरोधं कथं नावहतीति विचारणीयं विद्वद्भिः ।

एवं स्थितेऽस्मत्पूज्यपादाः पण्डितवरेण्य श्रीमत्पञ्चाननतर्करत्नभट्टाचार्य्यपादा निर्णयसिन्धुग्रन्थं हेमाद्रिप्रभृतिप्राचीनमहानिबन्धानुसारेण सुष्ठु योजयन्तो न केषां श्लाघनीयाः स्युः । सर्वेषां प्रामाणिकनिबन्धानामेकवाक्यत्वसम्भवेऽपि तत्र यथाकथञ्चिन्मतभेदमाविष्कर्त्तुमाग्रहो न खलु मतिमतां समुचितविचारपदवीमधिरोहति । तदुक्तं कैयटोपाध्यायैः ( ७।२।२।३७ )

'सन्मार्गसम्भवे को हि विमार्गं मतिमान् भजेत् ।' इति

मीमांसकभट्टाचार्य्यैरपि श्लोकवार्तिके प्रत्यक्षसूत्रे उक्तम्—

"सम्भवत्येकवाक्यत्वे वाक्यभेदश्च" नेष्यते । इति

एवं विमत्सरहृदयानां सतां पुरस्तादस्य व्याख्यानस्य समीचीनया रीत्या विचारणामर्थयमाना भूमिकानिमामत्रैव समाप्तिं नयामः ।

श्रीहाराणचन्द्र भट्टाचार्यः ( विद्यावारिधिः । )

अत्रत्यनिर्णयसिन्धुग्रन्थश्चेत्थम्—

"श्रवणयुतदिने संक्रान्त्यादौ तु—'उपाकर्म न कुर्वन्ति क्रमात् सामयर्जुर्विदः । ग्रहसंक्रान्तियुक्तेषु हस्तश्रवणपर्वसु' इति हेमाद्रौ निषेधात् पञ्चम्यादयो ग्राह्याः । मदनरत्नेऽपि—'यदिस्याच्छ्रावणं पर्व ग्रहसंक्रान्तिदूषितम् । स्यादुपाकरणं शुक्लपञ्चम्यां श्रावणस्य तु । स्मृतिमहार्णवे—'संक्रान्तिग्रहणं चापि यदि पर्वणि जायते । तन्मासे हस्तयुक्तायां पञ्चम्यां वा तदिष्यते' ॥ तत्रापि प्रयोगपारिजाते वृद्धमनुकात्यायनौ—'अर्धरात्रादस्ताच्चेत्संक्रान्तिर्ग्रहणं तदा । उपाकर्म न कुर्वीत परतश्चेन्न दोषकृत् ॥ इति । मदनरत्ने गार्ग्यो-

